श्रीमदानन्दतीर्थ(पूर्णप्रज्ञ)भगवत्पादाचार्यविरचित-

श्रीसर्वमूलान्तर्गताः

# प्रकरणग्रन्थाः

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# प्रमाणलक्षणम्

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ अशेषगुरुमीशेशं नारायणमनामयम् । संप्रणम्य प्रवक्ष्यामि प्रमाणानां स्वलक्षणम् ॥ यथार्थं प्रमाणम् । तद्द्विविधम् । केवलमनुप्रमाणं च । यथार्थज्ञानं केवलम् । तत्साधनमनुप्रमाणम् । केवलं चतुर्विधम् । ईशलक्ष्मीयोग्ययोगिभेदेन । पूर्वद्वयमनादि नित्यम् । स्वातन्त्र्यपारतन्त्र्याभ्यां तद्विशेषः । पूर्वं स्वपरगताखिलविशेषविषयम् । द्वितीयमीशेऽन्येभ्योऽधिकम् । असार्वत्रिकम् । अन्यत्र सर्वविषयम् । स्पष्टत्वे भेदः । योगिनामृजूनामनादिनित्यम् । ईशे जीवेभ्योऽधिकम् । अन्यत्रालोचने सर्वविषयम् । क्रमेण वर्धमानं आमुक्तेः । ततोऽव्ययम् । ततोऽर्वाक्क्रमेण ह्रसितम् । सादि च तात्त्विकेभ्योऽन्यत्र । अयोगिज्ञानमुत्पत्तिविनाशवत् । अल्पम् । अनुप्रमाणं त्रिविधम् । प्रत्यक्षमनुमानमागम इति । निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम् । निर्दोषोपपत्तिरनुमानम् । निर्दोषः शब्द आगमः । अर्थापत्त्युपमे अनुमाविशेषः । अभावोऽनुमा प्रत्यक्षं च । परामर्शापरामर्शविशेषात् । सम्भवपरिशेषावनुमा । आत्मान्योन्याश्रयचक्रकानवस्थाकल्पनागौरवश्रुतदृष्टहानादयो दूषणानुमा । उपक्रमोपसंहारतदैकरूप्याभ्यासापूर्वताफलार्थवादाश्च उपपत्तिविशेषाः । त एव सोपपत्तयो लिङ्गानि । समाख्यावाक्यप्रकरणस्थानानि च लिङ्गविशेषाः । व्याप्तिरुपपत्तिमूलम् । सा प्रतिज्ञाहेतुदृष्टान्तरूपा । हेतुगर्भा प्रतिज्ञा केवलाऽपि ।

सिद्धौ प्रतिज्ञायां हेतुमात्रं च । दृष्टान्तः सप्रतिज्ञो हेतुगर्भः उपपत्तिदोषौ विरोधासङ्गती । न्यूनाधिके वाचनिके । संवादानुक्तिगुता निग्रहाः । प्रत्यक्षं सप्तविधम् । साक्षिषडिन्द्रियभेदेन । मानसप्रत्यक्षजा स्मृतिः । स्मृत्यनुवादयोर्नाप्रामाण्यम् । यथार्थत्वानुभवात् । अहानेश्च । विरोधो मानस्ववाक्याभ्याम् । स्ववाक्यविरोधोऽपसिद्धान्तजातिरूपेण । जातिर्न मेये मानापेक्षेत्यादिका । मेये मानापेक्षास्तीति च तेनैव न्यायेन सिद्धत्वात् । मानविरोधश्च । छलमसङ्गतम् । अन्यच्च । गृष्टिविवक्षया गामानयेत्युक्ते पृथिवीविवक्षया गवानयनमशक्यमितिवत् । त्रिविधो विरोधः । प्रतिज्ञाहेतुदृष्टान्तभेदेन । प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोधः । हेतुस्वरूपासिद्धिरव्याप्तिश्चेति हेतुविरोधः । साध्यस्य साधनस्य वाऽननुगमो दृष्टांतविरोधः । प्रतिज्ञायाः समबलविरोध एव सप्रतिसाधनः । स एवोपाधिदोषोऽपि ।

सर्वे एते दृश्यत्वानुमाने द्रष्टव्याः । प्रत्यक्षागमादिभिर्जगतः सत्यत्वात् तत्पक्षे दृश्यत्वस्य च मिथ्यात्वात् । अनिर्वचनीयस्य प्रतिवादिनोऽसिद्धत्वात् । आत्मनोऽपि दृश्यत्वात् । शुक्तिरजतादेरनिर्वचनीयत्वाभावात् । अनिर्वचनीयदृश्यत्वाभावात् । मानससिद्धत्वादिति सप्रतिसाधनत्वाच्च । जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वे अनुमानागमप्रामाण्यग्राहिणोऽपि प्रत्यक्षत्वाविशेषादुत्तरक्षणे प्रामाण्यं न सेत्स्यतीति भेदादिवाक्यानामेव प्रामाण्यं स्यात् । तस्य साक्षिसिद्धत्वं चेज्जगत्सत्यत्वमपि साक्षिसिद्धम् । व्यभिचारश्चेदागमार्थानुमानिर्दोषत्वाध्यवसाये च समः । अत उत्तरदिवसेऽभेदवाक्यस्य भेदोऽर्थः स्यात् । निर्दोषानुमायाः सदोषत्वं, सदोषानुमाया निर्दोषत्वं इत्यव्यवस्था । आश्रयसाध्यव्यधिकरणासिद्धयो न दूषणं अतिप्रसंगाभावात् । अतिप्रसंगेन हि दोषत्वादोषत्वे कल्प्ये । व्याप्तिरेव हि प्रयोजिका । असत्यपि व्याप्तिरस्त्येव । असदाश्रयस्य साधकत्वं



नेत्यपि व्याप्तिं विना कथं निवार्यते । असदाश्रयमित्यादिविशेषणत्वसंभवे कथमव्याप्तिः । न चात्यन्ताभावोऽपि सर्वधर्मरहितः । प्रमेयत्वाद्यनुभवात् । परिशेषार्थापत्तिप्रामाण्याभ्युपगमाच्च । विमतं सकर्तृकमित्यत्र सर्वज्ञत्वस्य पक्षधर्मताबलेन सिद्ध्यङ्गीकारात् । परिशेषोऽर्थापत्तिरनुमानमित्यविशेषः । उपपत्तिमात्रत्वात् । उपपत्तेश्च व्याप्त्यपेक्षा सर्वथाङ्गीकार्येत्याग्रहमात्रेण भेदः । उपमानस्यापि व्याप्तिरूपत्वात् । न हि स्वसदृशेनासदृशं क्वचिद्दृष्टं । योग्यानुपलब्धेश्च लिंगत्वं अविशेषात् । उक्तदोषेष्वेवाशेषानुमानदोषाणामन्तर्भावः । साध्याविशिष्टोऽसिद्धः । सिद्धसाधकोऽसंगतः । न प्रमासाधनं प्रमाणं । ज्ञानव्यतिरिक्तायां प्रमायां प्रमाणाभावात् । न चाज्ञातपरिच्छित्तिरेव प्रमेत्यत्र किञ्चिन्मानं । याथार्थ्यमेव प्रामाण्यमित्यंगीकारात् । न चानुभूतिरेव प्रमाणम् । स्मृत्यादावव्याप्तेः । वेदानुमानादिप्रामाण्यप्रसिद्धेश्च । 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् । प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिरि'ति श्रुतेश्च । ऐतिह्यमागमभेदः । न च सम्यगनुभवसाधनं प्रमाणम् । ईश्वरज्ञानादावव्याप्तेः । अप्रामाण्ये प्रमाणाभावाच्च । प्रामाण्यज्ञाने च । तत्राप्यङ्गीकारेऽनवस्थितेः । स्वप्रकाशात्माङ्गीकारे तत्राव्याप्तेः । स्मृतेश्च प्रामाण्यानङ्गीकारे अनुभूतं मयेत्यत्र प्रमाणाभावात् । लिङ्गत्वेन प्रामाण्ये कल्पनागौरवम् । दृष्टहानिश्च । स्मृतिप्रमाणद्वैविध्यमात्रकल्पने मिथ्याज्ञानादेर्निराकरणादनुभवविरोधः । तदनुभवाभाव इत्युक्ते अनुभवः स्मृतिश्च नास्तीत्युक्ते किमुत्तरम् । स्वसिद्धैः साधनं परसिद्धैर्दूषणम् । अतो न दूषणे अपसिद्धान्तादि । इष्टापत्तिः सिद्धसाधनत्वादसंगतमेव ॥ आनन्दतीर्थमुनिना ब्रह्मतर्कोक्तमार्गतः । मानलक्षणमित्युक्तं संक्षेपाद्ब्रह्मसिद्धये ॥ अशेषमानमेयैकसाक्षिणेऽक्षयमूर्तये । अजेशपुरुहूतेड्य नमो नारायणाय ते ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं प्रमाणलक्षणं सम्पूर्णम् ॥

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# कथालक्षणम्

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ नृसिंहमखिलाज्ञानतिमिराशिशिरद्युतिम् । संप्रणम्य प्रवक्ष्यामि कथालक्षणमञ्जसा ॥ वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा । तत्त्वनिर्णयमुद्दिश्य केवलं गुरुशिष्ययोः ॥ कथाऽन्येषामपि सतां वादो वा समितेः शुभा । ख्यात्याद्यर्थं स्पर्धया वा सतां जल्प इतीर्यते ॥ वितण्डा तु सतामन्यैस्तत्त्वमेषु निगूहितम् । स्वयं वा प्राश्निकैर्वादे चिन्तयेत्तत्त्वनिर्णयम् ॥ रागद्वेषविहीनास्तु सर्वविद्याविशारदाः । प्राश्निका इति विज्ञेया विषमा एक एव वा ॥ अशेषसंशयच्छेत्ता निःसंशय उदारधीः । एकश्चेत्प्राश्निको ज्ञेयः सर्वदोषविवर्जितः ॥ एको वा बहवो वा स्युर्विष्णुभक्तिपरास्सदा । विष्णुभक्तिर्हि सर्वेषां सद्गुणानां स्वलक्षणम् ॥ पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धये । नैषा तर्केणापनेया मतिरित्याह हि श्रुतिः ॥ अन्यार्थ एवागमस्य वक्तव्यः प्रतिवादिना ॥ ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् । मूलरामायणं चैव संप्रोच्यन्ते सदागमाः ॥ अनुकूला य एतेषां ते च प्रोक्तास्सदागमाः । अन्ये दुरागमा नाम तैर्न साध्यं हि साध्यते ॥ स्वपक्ष आगमश्चैव वक्तव्यः प्रतिवादिना । तस्याप्यन्यार्थता साध्या वादिना स्वार्थसिद्धये ॥ अन्यार्थता निराकार्या स्वागमस्य विनिश्चयात् । उपपत्त्यवकाशोऽत्र ह्यागमार्थविनिर्णये ॥ वाद्यागमार्थे निर्णीत आगमार्थः परस्य तु । निर्णेयः सहितैः पश्चात्ततो निश्शेषनिर्णयः ॥ प्रत्यक्षसिद्धेष्वर्थेषु प्रश्ने मामक्षजं वदेत् । ज्ञानं वा



ज्ञानसिद्धेषु नानुमां प्रथमं वदेत् ॥ परतुष्टिकरं वाक्यं वदेतां यदि वादिनौ । स एवात्रागमो ज्ञेयः परतुष्टिर्हि तत्फलम् ॥ एवं निर्णयपर्यन्तं वादे सुबहवोऽपि हि । घटेयुश्चिरकालं च जल्पे यावत्परो जितः ॥ तत्त्वनिर्णयवैलोम्यं वादे साक्षात्पराजयः । संवादे श्लाघ्यतैव स्याद्गुरुत्वमितरस्य च ॥ तत्त्वनिर्णयवैलोम्ये निन्द्यो दण्ड्योऽथवा भवेत् । विरोधासङ्गतिन्यूनतूर्ष्णींभावादिकैर्जितः । भवेज्जल्पे, वितण्डायां न्यायो जल्पवदीरितः । संवादे दण्ड्यता न स्याद्वितण्डाजल्पयोरपि । पराजितत्वमात्रं स्यान्निन्द्यो दण्ड्योऽपि वाऽन्यथा । अनुवादादिराहित्यं नैव जल्पेऽपि दूषणम् ॥ विद्याहीनत्वलिङ्गेऽपि वादिनोः स्यात्पराजयः । तदभावान्नैव षट्कादन्यो निग्रह इष्यते । अन्तर्भावादिहान्येषां निग्रहाणामिति स्म ह ॥ विद्या परीक्षापूर्वैव वृत्तिर्जल्पवितण्डयोः । स्खलितत्वादिमात्रेण न तत्रापि पराजयः । वादजल्पवितण्डानामिति शुद्धं स्वलक्षणम् ॥ आनन्दतीर्थमुनिना ब्रह्मतर्कानुसारतः । कथालक्षणमित्युक्तं प्रीत्यर्थं शार्ङ्गधन्वनः ॥ सदोदितामितज्ञानपूरवारितहृत्तमाः । नरसिंहः प्रियतमः प्रीयतां पुरुषोत्तमः ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं कथालक्षणं सम्पूर्णम् ॥

॥ श्रीः ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# उपाधिखण्डनम्

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मी-हयग्रीवाय नमः ॥ ॐ ॥ नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः । अशेषदोषरहितः प्रीयतां कमलालयः ॥ अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन । उपाधिभेदाद्धटत इति चेत्स स्वभावतः । अज्ञानतो वा द्वैतस्य सत्यता स्वत एव चेत् । अनवस्थितिरज्ञानहेतौ वाऽन्योन्य-सिद्धिता ॥ चक्रकापत्तिरथवा भेदश्चोपाधितः कुतः । विद्यमानस्य भेदस्य ज्ञापको नैव कारकः । उपाधिर्दृष्टपूर्वो हि खेऽपि देशान्तरस्य सः ॥ ज्ञापको विद्यमानस्य मूढबुद्धिव्यपेक्षया । न चेदुपाधिसम्बन्ध एकदेशेऽथ सर्वगः । एकदेशेऽनवस्था स्यात्सर्वगश्चेन्न भेदकः ॥ सुख-दुःखादिभोगश्च स्वरूपैक्ये न भेदतः । दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा । नानादेहगभोगानुसन्धानं योगिनो यथा । न चेद्भोगानुसन्धानं तदिच्छा योगिनः कुतः । अनुसन्धानरहित-देहबाहुल्यमन्यथा । सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः ॥ सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता । तत्सिद्धौ चैव तत्सिद्धि-रित्यन्योन्यव्यपाश्रयः । आत्मस्वभावभेदस्य विदोषत्वेन चाखिलः । प्रत्यक्षादिविरोधाच्च दुष्टः पक्षोऽयमञ्जसा । चेष्टालिङ्गेन सात्मत्वे परदेहस्य साधिते । अन्यत्वं स्वात्मनस्तस्मात्सर्वैरेवानुभूयते ॥ अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता । सर्वज्ञतादीशगुणविरुद्धा ह्यनु-भूतिगाः ॥ सार्वज्ञादिगुणा विष्णोः श्रुतिषु प्रतिपादिताः । सत्यः सो अस्य महिमेत्यादिवाक्यान्मृषा न च । न च वेदोक्तमिथ्यात्वे



मानं तन्मानतापि न । अतोऽज्ञासम्भवादेव नाधिकार्यैक्यवादिनाम् ॥ अतो नाज्ञातमिति च विषयो विषयान्तरे । अज्ञाभावात्फलं कस्य योगः शशनृशृङ्गयोः ॥ दुर्घटत्वं भूषणं चेत्स्यादविद्यात्वमात्मनः । अंधन्तमोऽप्यलङ्कारो नित्यदुःखं शिरोमणिः ॥ अतः परो मात्रयेति पूर्वश्रुतिनिदर्शितः । अन्यमीशमितिश्रुत्या भिन्नजीवदृशं गतः । भिन्नत्वेनात्मसादृश्यदो यदेति श्रुतेः सदा ॥ मायावादतमोव्याप्तमिति तत्त्वदृशा जगत् । भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेः सदा ॥ नमोऽ-मन्दनिजानन्दसान्द्रसुन्दरमूर्तये । इंदिरापतये नित्यानन्दभोजन-दायिने ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितमुपाधि-खण्डनं सम्पूर्णम् ॥

॥ श्रीः ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# मायावादखण्डनम्

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मी-हयग्रीवाय नमः ॥ ॐ ॥ नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः । जयत्यमितसज्ज्ञानसुखशक्तिपयोनिधिः ॥

विमतमनारम्भणीयं अन्यथाप्रतिपादकत्वात् यदित्थं तत्तथा यथा सम्प्रतिपन्नम् । न हि ब्रह्मात्मैक्यस्य याथार्थ्यं तत्पक्षे । अद्वैतहानेः स्वरूपातिरेके । अनतिरेके स्वप्रकाशत्वादात्मनः सिद्धसाधनता । निर्विशेषत्वादात्मनो नानधिगतो विशेषः । सिद्धत्वात्स्वरूपस्य विशेषाभावाच्च नाज्ञानं कस्यचिदावरकम् । अनधिगतार्थगन्तृप्रमाणमिति च तन्मतम् । अज्ञानासम्भवादेव तन्मतमखिलमपाकृतम् । मिथ्यात्वे चैक्यस्याऽतत्त्वावेदकत्वमागमस्य स्यात् । सत्यता च भेदस्य । एवमेव प्रयोजनमपि निरस्तम् । स्वरूपत्वान्मोक्षस्य पूर्वमेव सिद्धत्वात् । अज्ञानासम्भवेन चतुर्थप्रकाराभावात्पञ्चमप्रकारतापि निरस्ता । विषयप्रयोजनाभावादेवाधिकारी च । तदभावादेव सम्बन्धोऽपि ॥

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत ॥ इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ । एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' ॥ 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च



परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' ॥ 'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' । इति विष्णोः पुरुषोत्तमत्वमेव सर्वशास्त्रार्थत्वेन भगवता श्रुत्या चाभिहितम् ॥ इति सर्वज्ञमुनिना मायावादतमोऽखिलम् । निरस्तं तत्त्ववादेन सतां संशयनुत्तये ॥ नास्ति नारायणसमं न भूतं न भविष्यति । एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम् ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं मायावादखण्डनं सम्पूर्णम् ॥

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# प्रपञ्चमिथ्यात्वानुमानखण्डनम्

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ विमतं मिथ्या दृश्यत्वाद्यदित्थं तत्तथा यथा सम्प्रतिपन्नम् । इत्युक्ते जगतोऽभावादाश्रयासिद्धः पक्षः । अनिर्वचनीयासिद्धेरप्रसिद्धविशेषणः । सदसद्वैलक्षण्ये मिथ्यात्वे सिद्धसाधनता । दृश्यत्वाभावादसिद्धो हेतुः । अनिर्वचनीयासिद्धेरेव । अनिर्वचनीयासिद्धेरेव सपक्षाभावाद्विरुद्धः । आत्मनोऽपि दृश्यत्वादनैकान्तिकः । जगतोऽभावेऽनुमानस्याप्यभाव इति तर्कबाधितत्वेनानध्यवसितः । प्रत्यक्षादिविरुद्धत्वाद्विश्वं सत्यमित्यादिवाक्यविरुद्धत्वाच्च कालात्ययापदिष्टः । रजतं दृष्टमितिभ्रममात्रत्वात् विमतं सत्यं दृश्यत्वादात्मवदित्यपि प्रयोज्यत्वात्प्रकरणसमः । विमतं सत्यं प्रमाणदृष्टत्वाद्यदित्थं तत्तथा यथात्मेतिप्रयोगात्सत्प्रतिसाधनः शुक्तिरजतस्याप्यनिर्वचनीयत्वाभावात्साध्यविकलो दृष्टान्तः । उक्तप्रकारेण दृश्यत्वाभावात्साधनविकलश्च । प्रमाणविरुद्धत्वमुपाधिः । साध्यधर्मविशिष्टः पक्षः । साध्यसमानधर्मविशिष्टः सपक्षः । साध्यविपरीतधर्मविशिष्टो विपक्षः । पक्षवचनं प्रतिज्ञा । लिङ्गं हेतुः । निदर्शनं दृष्टान्तः ॥ यो दृश्यते सदानन्दनित्यव्यक्तचिदात्मना । निर्दोषाखिलकल्याणगुणं वन्दे रमापतिम् ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं प्रपञ्चमिथ्यात्वानुमानखण्डनं सम्पूर्णम् ॥

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# तत्त्वसङ्ख्यानम्

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्वमिष्यते । स्वतन्त्रो भगवान्विष्णुर्भावाभावौ द्विधेतरत् ॥ प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते । चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः ॥ दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम् । नित्यादुःखा रमाऽन्ये तु स्पृष्टदुःखास्समस्तशः ॥ स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा । दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा ॥ देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा । एवं विमुक्तियोग्याश्च तमोगाः सृतिसंस्थिताः ॥ इति द्विधा मुक्त्ययोग्या दैत्यरक्षःपिशाचकाः । मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः । ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ॥ नित्यानित्यविभागेन त्रिधैवाचेतनं मतम् । नित्या वेदाः पुराणाद्याः कालः प्रकृतिरेव च ॥ नित्यानित्यं त्रिधा प्रोक्तमनित्यं द्विविधं मतम् । असंसृष्टं च संसृष्टमसंसृष्टं महानहम् ॥ बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च । संसृष्टमण्डं तद्गं च समस्तं सम्प्रकीर्तितम् ॥ सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने । बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ॥ विष्णुनास्य समस्तस्य समासव्यासयोगतः ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं तत्त्वसङ्ख्यानं सम्पूर्णम् ॥

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# तत्त्वविवेकः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ स्वतन्त्रं परतन्त्रं च प्रमेयं द्विविधं मतम् । स्वतन्त्रो भगवान्विष्णुर्निर्दोषाखिलसद्गुणः ॥ द्विविधं परतन्त्रं च भावोऽभाव इतीरितः । पूर्वापरसदात्वेन त्रिविधोऽभाव इष्यते ॥ भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् । चेतनोऽचेतनश्चेति भावोऽपि द्विविधः स्मृतः ॥ नित्यमुक्तश्च सृतियुक्परतन्त्रोऽपि चेतनः । द्विधैव श्रीर्नित्यमुक्ता सृतियुक्‍ द्विधा मतः ॥ मुक्तोऽमुक्त इति ह्यत्र ब्रह्मान्ता उत्तरोत्तरम् । मुक्ताः शतगुणाः प्रोक्ता रमा तेभ्योऽखिलैर्गुणैः ॥ नित्यं बहुगुणोद्रिक्ता ततोऽनन्तगुणो हरिः । अमुक्तास्त्रिविधास्तत्र नीचमध्योच्चभेदतः । मुक्तियोग्यास्तत्र चोच्चा नित्यावर्तास्तु मध्यमाः । नीचा नित्यतमोयोग्या द्विधैवाचेतनं मतम् ॥ नित्यानित्यत्वभेदेन देशः कालः श्रुतिस्तथा । भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकम् ॥ एषां विकारोऽनित्यः स्यान्नित्या एव हि चेतनाः । गुणक्रियाजातिपूर्वा धर्माः सर्वेऽपि वस्तुनः ॥ रूपमेव द्विधं तच्च यावद्वस्तु च खण्डितम् । खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवत् ॥ खण्डितं रूपमेवात्र विकारोऽपि विकारिणः । कार्यकारणयोश्चैव तथैव गुणतद्वतोः ॥ क्रियाक्रियावतोस्तद्वत्तथा जातिविशेषयोः । विशिष्टशुद्धयोश्चैव तथैवांशांशिनोरपि ॥ य एतत्परतन्त्रं तु सर्वमेव हरेः सदा । वशमित्येव जानाति संसारान्मुच्यते हि सः ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः तत्त्वविवेकः सम्पूर्णः ॥

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# तत्वोद्द्योतः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ सर्वत्राखिलसच्छक्तिः स्वतन्त्रोऽशेषदर्शनः । नित्यातादृशचिच्चेत्ययन्तेष्टो नो रमापतिः ॥

विमतो भिन्नो मुक्तत्वाद्यदित्थं तत्तथा यथा सम्प्रतिपन्नः । न च भेदे विकल्पो युज्यते । अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेव । शशविषाणं गोविषाणं वोच्यत इतिवत् । न चानिर्वचनीये किञ्चिन्मानम् । मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च । अनुमानस्य चाप्रसिद्धविशेषणः पक्षः । न च धूमत्ववन्मिथ्यात्वमित्युभयसम्प्रतिपन्नं सामान्यमस्ति । न च बाष्पारोपितधूमेन धूमवत्त्वं व्यभिचरति । न च भावाभावविलक्षणं क्वचिदागमो वक्ति । 'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यदि'त्यत्र च । पारिशेष्येणानिर्वचनीयत्वाङ्गीकारे 'आनीदवातं स्वधया तदेकमि'ति तदानीं परिशिष्टत्वाद्ब्रह्मण एवानिर्वचनीयत्वं स्यात् । 'मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते । मूर्तामूर्तेतरद्ब्रह्म न सत्तन्नासदुच्यत'इति पैङ्गिश्रुतिः । 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सदि'ति माध्यन्दिनश्रुतिः । 'अद्भुतत्वादनिर्वाच्यं ब्रह्म चिच्चेत्यमेव च । अचिन्त्यं तत एवैतदतर्क्याज्ञेयमेव च । ऋ गताविति धातोस्तु पूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्तमित्युक्तमनृतं परिणामतः । प्रकृतिप्राकृतं प्रोक्तमसत्तदशुभत्वतः । असतां बुद्धिगम्यत्वादसत्यमिति चोच्यते । नियमेन बहिश्चित्तास्ते

सन्तो ब्रह्मणि स्थिताः। विश्वं सत्यं वशे विष्णोर्नित्यमेव प्रवाहतः। न क्वाप्यनीदृशं विश्वं तत्तत्कालानुसारतः। असत्यमप्रतिष्ठं ये जगदाहुरनीश्वरम्। त आसुराः स्वयं नष्टा जगतः क्षयकारिण' इत्यादि व्यासस्मृतौ। 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। अपरस्परसम्भूतं किमन्यत्कामहैतुकम्। एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः। प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिता' इत्यादि च गीतासु। 'विश्वं सत्यं मघवानायुवोरिदापश्च न प्रमिनन्ति व्रतं वाम्। प्रधान्वस्य महतो महानि सत्यासत्यस्य करणानि वोचम्'। 'सत्यः सो अस्य महिमा गृणेशवो यज्ञेषु विप्रराज्ये'। 'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्य'इत्यादि श्रुतिभ्यश्च। न चार्थापत्त्याऽनिर्वचनीयसिद्धिः। असतः प्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः। न च बाध्यं जगदित्यत्र किञ्चिन्मानम्। बाध्यत्वमपि हि तेषां मिथ्या। तस्य च मिथ्यात्वेऽबाध्यत्वमेव सत्यं स्यात्। सद्विलक्षणत्वं च सज्जातिविलक्षणत्वं सन्मात्रविलक्षणत्वं वा। जात्यङ्गीकारे सद्धेतुत्वम्। सन्मात्रविलक्षणत्वं चेत्सिद्धसाधनता। ब्रह्मवैलक्षण्याङ्गीकारात्। न च कयापि युक्त्या मानेन वा भेदनिराकरणं भवति। अङ्गीक्रियमाणत्वात्। अनिर्वचनीयासिद्धेश्च। सद्विलक्षणत्वमसद्विलक्षणत्वं च मिथ्येत्यविलक्षणत्वमेव सत्यं स्यात्।

एवमेव हेत्वादिष्वपि विकल्पो निराकरणीयः। दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः। आत्मनोऽपि दृश्यत्वादनैकान्तिकता च। न चात्मनो दृक्कर्मत्वं विना तज्ज्ञानत्वम्। तदज्ञाननिवृत्तिश्च तेन भवति। न च तदाकारम्। अतद्विषयत्वादेव। तद्विषयत्वमेव हि तदाकारत्वम्। न हि ज्ञानज्ञेययोरेकाकारता। न ह्यज्ञानस्य घटाश्रयत्वं ब्रह्माश्रयत्वं वास्ति। पुंगतमेव हि तमः ज्ञानेन निवर्तते। विषयाश्रयं चेदज्ञानं निवर्तते तर्ह्येकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात्।



अतद्विषयज्ञानेन तदज्ञाननिवृत्तौ घटज्ञानेनापि निवर्तेत। अविषयत्वादेव तस्य ज्ञानत्वं न स्याद्घटवत्।

जडत्वं चाप्रमातृत्वमेव। न च प्रमातृत्वमात्मनस्तैरङ्गीक्रियते। अतस्तदप्यनैकान्तिकम्। मिथ्याप्रमातृत्वं चानिर्वचनीयनिरासादेव निरस्तम्। यदि जडत्वं नामाप्रकाशत्वं तदप्यात्मनः स्वविषयप्रकाशत्वाभावात्परविषयप्रकाशत्वाभावाच्चानैकान्तिकमेव। स्वविषयत्वं हि कर्तृकर्मविरोधात्तैर्नाङ्गीक्रियते। मिथ्याभूतपरविषयत्वं चानिर्वचनीयनिरासादेव निरस्तम्। विषयवर्जितः प्रकाश एव न भवति घटवत्। तत्प्रमाणाभावात्।

देशतः कालतः परिच्छिन्नत्वं प्रकृतिकालादिष्वभावाद्भागासिद्धम्। वस्तुतः परिच्छिन्नत्वमात्मनोऽपि भेदाङ्गीकारादनैकान्तिकम्।

प्रत्यक्षबाधितं च जगन्मिथ्यात्वम्। सदिति प्रतीयमानत्वात्। न च प्रत्यक्षसिद्धमन्येन केनापि बाध्यं दृष्टम्। चन्द्रप्रादेशत्वादिविषयं तु दूरस्थत्वादिदोषयुक्तत्वादपटु। न च जगत्प्रत्यक्षस्यापटुत्वे किञ्चिन्मानम्। न च जगतोऽज्ञानजन्यत्वे किञ्चिन्मानम्। 'न च मायाविना माया दृश्यते विश्वमीश्वरः। सदा पश्यति तेनेदं न मायेत्यवधार्यताम्॥ अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवेत्। सर्वापरोक्षविद्विष्णुर्विश्वदृक्तन्न तन्मृषे'ति ब्रह्माण्डे। 'ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि। एक आत्मा परब्रह्मभावो मुक्तिरिति ह्यपि। एवमादि विरुद्धानि वचनान्यथ युक्तयः। प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः। वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना। इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपी'ति व्यासस्मृतिः। 'ॐ नासतो दृष्टत्वात्'। 'नाभाव उपलब्धेः'। 'वैधर्म्याच्च न स्वप्नादिवदि'त्यादि भगवद्वचनेनापि निरस्ताः।

न च शून्यवादिनः सकाशाद्वैलक्षण्यं मायावादिनः । व्यावहारिकसत्त्वस्य तेनाप्यङ्गीक्रियमाणत्वात् । 'सत्यं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम् । सांवृतं व्यावहार्यं स्यान्निवृत्तौ पारमार्थिकम् । विचार्यमाणे नो सत्त्वं सत्त्वं चापि प्रतीयते । यस्य तत्सांवृतं ज्ञेयं व्यवहारपदं च यदि'त्यादिना । न च निर्विशेषब्रह्मवादिनः शून्यात्कश्चिद्विशेषस्तस्य । 'निर्विशेषं स्वयं भातं निर्लेपमजरामरम् । शून्यं तत्त्वमविज्ञेयं मनो वाचामगोचरम् । जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यत् । नित्यभावनया भातं तद्भावं योगिनं नयेत् । भावार्थप्रतियोगित्वं भावत्वं वा न तत्त्वतः । विश्वाकारं च संवृत्या यस्य तत्पदमक्षयमि'त्यादि तद्वचः । अनृतजडविरोधिरूपमन्तत्रयमलबन्धनदुःखताविरुद्धमिति च मायावादी । 'नास्य सत्त्वमसत्त्वं वा न दोषो गुण एव वा । हेयोपादेयरहितं तच्छून्यं पदमक्षयमि'ति च शून्यवादी । सत्त्वादयो धर्माः परमार्थतो मायावादिनापि नाङ्गीक्रियन्ते । सर्वविशेषविनिर्मुक्तत्वाङ्गीकारात् । 'अवाच्यं सर्वशब्दैस्तल्लक्ष्यते चाखिलैः पदैः । अज्ञेयं ज्ञानलक्ष्यं च तच्छून्यं पदमक्षयमि'ति च शून्यवादी । न चाखण्डत्वेन कश्चिद्विशेषः । 'यदखण्डं पदं लक्ष्यं सर्वैरपि विशेषणैः । सर्वैर्विशेषणैर्मुक्तं तच्छून्यं पदमक्षयमि'ति च शून्यवादी । एवमेव मायावादिराद्धान्तः । न च मायावादिनो भावत्वं नाम धर्मः । न च शून्यवादिनः शून्यत्वं नाम धर्मः । 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे । यदासीत्तत एवाद्यः स्वयम्भूः समभूदजः' । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर'इति भगवद्राद्धान्तः । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'त्यादि श्रुतिः । प्रकृष्टप्रकाशश्चन्द्र इत्यादिषु प्रकृष्टत्वादिविशेषणानि सन्त्येवेति न तत्साम्यम् । अनित्यदेशकालसम्बन्धित्वस्य सत्त्वान्न सोऽयं देवदत्त



इत्याद्युपमा च । देवदत्तादिस्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्नः । नक्षत्रादिव्यतिरेकमात्रस्यापि सिद्धत्वान्न व्यतिरेकमात्रे । अन्यथा प्रश्नस्यैवासम्भवात् । अतः कैर्विशेषणैर्विशिष्ट इति प्रश्ने प्रकृष्टप्रकाशतद्देशकालादिविशिष्ट एव वाक्यार्थः । अङ्गीक्रियमाणत्वाद्विशिष्टादेरनिर्वचनीयाभावाच्च सत्यत्वं च सिद्धम् । दृष्टस्य वस्तुनो बलवद्दृष्टिं विना नान्यद्बाधकमिति दुर्घटत्वे सुघटत्वे वा नानिर्वचनीयसिद्धिः । सर्ववैलक्षण्याङ्गीकाराद्दुर्घटमपि ब्रह्म प्रमाणादङ्गीक्रियत एव ।

जगतो भिन्नमभिन्नं भिन्नाभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यते । भिन्नं चेद्भेदादिविशिष्टाच्छुद्धं भिन्नमभिन्नंवेत्याद्यनवस्था । अभिन्नं चेन्मिथ्यारूपेण जगता ब्रह्मापि मिथ्यैव स्यात् । भिन्नाभिन्नं चेद्दोषद्वयमपि । उभयविलक्षणं चेदनिर्वचनीयत्वं ब्रह्मण एवापतितम् । यद्येवमपि नानिर्वचनीयत्वं ब्रह्मणस्तर्हि जगतोऽपि न स्यात् । विश्वं सत्यमित्यादिवचनमत्राप्युक्तम् । 'न सत्तन्नासदुच्यते' । 'असद्वा इदमग्र आसीत्' । 'नासदासीन्नो सदासीदि'त्यादि ब्रह्मणोऽपि मिथ्यात्वे प्रमाणमस्ति । न हि दृष्टेर्बलवत्किञ्चित्प्रमाणम् । न हि युक्तिपराजितोऽपि क्षुधितो नान्नमत्ति । बलवद्दृष्टयबाधे । न चान्नत्वे दुर्घटे तस्यानन्नत्वं भवति । दृष्टयबाधितदृष्टस्य । न चान्नानन्नवैलक्षण्यमनुभूयते । न च तथा व्यवहारः । न च तत्र किञ्चिन्मानम् । अतो विशिष्टादिनिराकरणयुक्तीनामपि विशिष्टाद्यपेक्षत्वाज्ञात्युत्तरमिति न युक्तिबाधापि । अतो निखिलगुणगणाढ्यमेव ब्रह्म श्रुत्यभिप्रेतम् ।

अनिर्वचनीयासिद्धेरेवानुमानस्याप्यसिद्धिः । यदि जगन्मिथ्या स्यात्तदा दृश्यत्वाद्यनुमानस्यापि जगदन्तःपातित्वेन मिथ्यात्वादसिद्धिः स्यात् । वाचारम्भणं विविधप्रकारः नामधेयं नित्यं धार्यं नाम मृत्तिकेत्यादि वैदिकमेव । अनित्यत्वात्साङ्केतिकं नामाप्रधानं नित्यत्वा-

न्मृत्तिकादिनामैव प्रधानम् । प्रधानज्ञानादप्रधानं ज्ञातमिव भवति । एवं प्रधानस्य परमात्मनो ज्ञानादप्रधानं ज्ञातमिव भवति । प्राधान्यज्ञापनार्थमेव सृष्ट्यादिकथनम् । यथा सोम्येत्याद्यपि सादृश्यकथनम् । न चैकनखनिकृन्तनविकारः सर्वं कार्ष्णायसम् । प्रधानपुरुज्ञानाद्ग्रामो ज्ञात इति व्यपदेशोऽस्ति । न हि सत्यज्ञानेन मिथ्याज्ञानं भवति । मुक्तामुक्तयोर्भेदाभावे मुक्तस्य संसारः संसारिणो वा मुक्तत्वं स्यात् । यद्यज्ञानकृतो भेदस्तर्हीश्वरस्याज्ञानाभावात्संसारिणैक्यं तेनानुभूयेत । ततश्च दुःखित्वं स्यात् । 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप' । 'सुखं दुःखं भवोऽभावो भयं चाभयमेव च । अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः । भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' । 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' । इत्यादिनेश्वरेणापि भेदस्यैवानुभूयमानत्वाच्च । तत एवाभ्रान्तत्वान्न मुक्तस्यापि भेदनिवृत्तिः । न चोपाधिभेदमात्रेणेश्वरस्य दुःखाभावः । हस्तपाद्युपाधिभेदेऽपि भोक्तुरेकत्वानुभवात् । 'उद्यतायुधदोर्दण्डाः पतितस्वशिरोऽक्षिभिः । पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीन्युधी'ति भारतवचनान्न विश्लेषाद्विशेषः । अतोऽनौपाधिकत्वादेव भेदस्य न मुक्तस्येश्वरैक्यम् । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' । 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्ययुपैती'त्यादि मुक्तभेदवचनेभ्यश्च ।

एवं प्रत्यक्षानुमानागमविरुद्धत्वादभेदविषयवत्प्रतीयमानान्यपि वाक्यानि सादृश्याद्यर्थान्येव योजनीयानि । 'विरुद्धवत्प्रतीयन्त आगमा यत्र वै मिथः । तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यत'इति ब्राह्मवचनाच्च । भेदाद्यनुभवस्य भ्रान्तित्वाङ्गीकारे तदपलापयुक्तेर्नितरां



भ्रान्तित्वाद्भेदाद्यनुभवस्याभ्रान्तित्वमेव भवति । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् । एकजीववादपक्षे तन्निष्ठानां मृत्यनन्तरमपि विश्वस्यानिवृत्तत्वाद्भेदनिष्ठ एवैकजीव इत्यापतति । तस्य च तत्रैवाग्रहान्न कदाचिद्भेदनिवृत्तिरित्यनिवृत्तिरेव भवति । न चैकजीवाज्ञानपरिकल्पितास्समस्ता इत्यत्र किञ्चिन्मानम् । अतो मुक्तेभ्योऽप्यन्य एव समस्तगुणपरिपूर्णो भगवान्विष्णुरिति सिद्धम् ॥

'ब्रह्मेशानदिभिर्देवैर्यत्प्राप्तुं नैव शक्यते । तद्यत्स्वभावः कैवल्यं स भवान्केवलो हरे' ॥ 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' ।

सत्यचिच्चेत्यपतये मुक्तामुक्तोत्तमाय ते । नमो नारायणायार्यवृन्दवन्दितपद्द्वय ॥

आनन्दतीर्थपुंसिंहो मायावादिदितेःसुतान् । विदार्य युक्तिनखरैरप्रतीपो विभासते ॥ १ ॥ पलायध्वं पलायध्वं त्वरया मायिदानवाः । सर्वज्ञहरिरायाति तर्कागमदरारिभृत् ॥ २ ॥ द्रवत द्रवताशु मायिनः प्रविशध्वमतन्द्रिता गुहाः । कमलारमणाम्बराश्रयः समुदेत्यखिलज्ञभास्करः ॥ ३ ॥ नृहरिः सकलज्ञनामकः समुपैति हि मायिदानवान् । प्रपलायनमत्र तत्क्षमं त्वरया वो वसतिर्गुहासु च ॥ ४ ॥ जयत्यानन्दतीर्थेष्टदेवता नरकेसरी । विपाटिताज्ञानतमःकपाटात्युरुहुङ्कृतः ॥ ५ ॥ जयत्यमितपौरुषः स्वजनतेष्टचिन्तामणिः । अजेशमुखवन्दितो गुणगणार्णवः श्रीपतिः ॥ ६ ॥ सर्वज्ञसन्मुनीन्द्रोच्चसन्मनःपङ्कजालयः । अजितो जयति श्रीशो रमाबाहुलताश्रयः ॥ ७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्तत्वोद्द्योतः सम्पूर्णः ॥

॥ श्रीः ॥

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# कर्मनिर्णयः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॐ ॥ य इज्यते विधीशानशक्रपूर्वैः सदा मखैः। रमाप्रणयिने तस्मै सर्वयज्ञभुजे नमः ॥

ऋग्वेदब्राह्मणचतुर्थपञ्चिकाऽऽद्याध्यायादिमखण्डानि

॥ ॐ ॥ देवा वै प्रथमेनाह्नेन्द्राय वज्रं समभरंस्तं द्वितीयेनाह्नाऽसिञ्चंस्तं तृतीयेनाह्ना प्रायच्छंस्तं चतुर्थेऽहन्प्राहरत्तस्माच्चतुर्थेऽहन्षोळशिनं शंसति वज्रो वा एष यत्षोळशी तद्यच्चतुर्थेऽहन्षोळशिनं शंसति वज्रमेव तत्प्रहरति द्विषते भ्रातृव्याय वधं योऽस्यस्तृत्यस्तस्मै स्तर्तवै वज्रो वै षोळशी पशव उक्थानि तं परस्तादुक्थानां पर्यस्य शंसति तं यत्परस्तादुक्थानां पर्यस्य शंसति वज्रेणैव तत्षोळशिना पशून्परिगच्छति तस्मात्पशवो वज्रेणैव षोळशिना परिगता मनुष्यानभ्युपावर्तन्ते तस्मादश्वो वा पुरुषो वा गौर्वा हस्ती वा परिगत एव स्वयमात्मनेऽत एव वाचाभिषिद्ध उपावर्तते वज्रमेव षोळशिनं पश्यन्वज्रेणैव षोळशिना परिगतो वाग्घि वज्रो वाक्षोळशीतदाहुः किं षोळशिनः षोळशित्वमिति षोळशः स्तोत्राणां षोळशः शस्त्राणां षोळशभिरक्षरैरादत्ते षोळशभिः प्रणौति षोळशपदां निविदं दधाति तत्षोळशिनः षोळशित्वं द्वे वा अक्षरे अतिरिच्येते षोळशिनोऽनुष्टुभमभिसम्पन्नस्य वाचो वाव तौ स्तनौ सत्यानृते वाव ते अवत्येनं सत्यं नैनमनृतं हिनस्ति य एवं वेद ॥ खण्डः १ ॥

गौरिवीतं षोळशिसाम कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं गौरिवीतं तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान्गौरि-



ऋग्वेदब्राह्मणम्

वीतं षोळशिसाम कुरुते नानदं षोळशिसाम कर्तव्यमित्याहुरिन्द्रो वै वृत्राय वज्रमुदयच्छत्तमस्मै प्राहरत्तमभ्यहनत्सोऽभिहतो व्यनदद्यद्व्यनदत्तन्नानदं सामाभवत्तन्नानदस्य नानदत्वमभ्रातृव्यं वा एतद्भ्रातृव्यहा साम यन्नानदमभ्रातृव्यो भ्रातृव्यहा भवति य एवं विद्वान्नानदं षोळशिसाम कुरुते तद्यदि नानदं कुर्युरविहृतः षोळशी शंस्तव्योऽविहृतासु हि तासु स्तुवते यदि गौरिवीतं विहृतः शोळशी शंस्तव्यो विहृतासु हि तासु स्तुवते ॥ खण्डः २ ॥

अथातश्छन्दांस्येव व्यतिषजत्या त्वा वहन्तु हरय उपो षु शृणुही गिर इति गायत्रीश्च पङ्क्तीश्च व्यतिषजति गायत्रो वै पुरुषः पाङ्क्ताः पशवः पुरुषमेव तत्पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति यदु गायत्री च पङ्क्तिश्च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैति यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्युष्णिहश्च बृहतीश्च व्यतिषजत्यौष्णिहो वै पुरुषो बार्हताः पशवः पुरुषमेव तत्पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति यदुष्णिक्च बृहती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैत्याधूर्ष्वस्मै ब्रह्मन्वीर ब्रह्मकृतिं जुषाण इति द्विपदां च त्रिष्टुभं च व्यतिषजति द्विपाद्वै पुरुषो वीर्यं त्रिष्टुप्पुरुषमेव तद्वीर्येण व्यतिषजति वीर्ये प्रतिष्ठापयति तस्मात्पुरुषो वीर्ये प्रतिष्ठितः सर्वेषां पशूनां वीर्यवत्तमो यदु द्विपदा च विंशत्यक्षरा त्रिष्टुप्च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैति एष ब्रह्मा प्रतेमहे विदथे शंसिषं हरी इति द्विपदाश्च जगतीश्च व्यतिषजति द्विपाद्वै पुरुषो जागताः पशवः पुरुषमेव तत्पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति तस्मात्पुरुषः पशुषु प्रतिष्ठितोऽत्ति चैनानधि च तिष्ठति वशे चास्य यदु द्विपदा च षोळशाक्षरा जगती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैति त्रिकद्रुकेषु

महानाम्नीनामृचामुपसर्गा ये उपसर्जनभूतास्तानुपसृजति संयोजयति । महन्नाम यास्वृक्षु विद्यते ता महानाम्न्यः । परस्य

---

ऋग्वेदब्राह्मणम्

महिषो यवाशिरं प्रोऽग्वस्मै पुरोरथमित्यतिच्छन्दसः शंसति च्छन्दसां वै यो रसोऽत्यक्षरत्सोऽतिच्छन्दसमभ्यत्यक्षरत्तदतिच्छन्दसोऽतिच्छन्दस्त्वं सर्वेभ्यो वा एष च्छन्दोभ्यस्सन्निर्मितो यत्पोळशी तद्यदतिच्छन्दसः शंसति सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्मिमीते सर्वेभ्यश्छन्दोभ्यः सन्निर्मितेन पोळशिना राध्नोति य एवं वेद ॥ खण्डः ३ ॥

महानाम्नीनामुपसर्गानुपसृजत्ययं वै लोकः प्रथमा महानाम्न्यन्तरिक्षलोको द्वितीयाऽसौ लोकस्तृतीया सर्वेभ्यो वा एष लोकेभ्यस्सन्निर्मितो यत्षोळशी तद्यन्महानाम्नीनामुपसर्गानुपसृजति सर्वेभ्य एवैनं तल्लोकेभ्यस्सन्निर्मिमीते सर्वेभ्यो लोकेभ्यस्सन्निर्मितेन षोळशिना राध्नोति य एवं वेद । प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत यो व्यतीरँफाणयदिति प्रज्ञाता अनुष्टुभः शंसन्ति तद्यथेह चेह चापथेन चरित्वा पन्थानं पर्यवेयात्तादृक्तद्यत्प्रज्ञाता अनुष्टुभः शंसति स यो व्याप्तो गतश्रीरिव मन्येताविहृतं षोळशिनं शंसयेन्नेच्छन्दसां क्रृच्छ्रादवपद्या इत्यथ यः पाप्मानमपजिघांसुः स्याद्विहृतं षोळशिनं शंसयेद्व्यतिषक्त इव वै पुरुषः पाप्मना व्यतिषक्तमेवास्मै तत्पाप्मानं शमलमपहन्त्यप पाप्मानं हते य एवं वेदोद्यद्ब्रध्नस्य विष्टपमित्युत्तमया परिदधाति स्वर्गो वै लोको ब्रध्नस्य विष्टपं स्वर्गमेव तं लोकं यजमानं गमयत्यपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्यो वा एष सवनेभ्यस्संनिर्मितो यत्षोळशी तद्यदपाः पूर्वेषां हरिवः सुतानामिति यजति पीतवद्वै प्रातःसवनं प्रातःसवनादेवैनं सत्सन्निर्मिमीतेऽथो इदं सवनं केवलं त इति माध्यन्दिनं वै सवनं केवलं माध्यन्दिनादेवैनं तत्सवनात्सन्निर्मिमीते ममद्धि सोमं मधुमन्तमिन्द्रेति मद्वद्वै तृतीयसवनं तृतीयसवनादेवैनं



ब्रह्मणो यन्नामेन्द्रादिकं तन्महार्थत्वान्महत् । महद्धि तत्परं ब्रह्म । अशेषगुणपूर्तेः । तत्रैक आहुरगुणं ब्रह्मेति । न तद्युक्तम् । श्रुतियुक्तिविरोधात् । तथाहि श्रुतिः । 'सत्यं ज्ञानमनन्तं ब्रह्म' । 'विज्ञानमानन्दं ब्रह्म' । 'यः सर्वज्ञः स सर्वविद्यस्य ज्ञानमयं तपः' । 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' । 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' । 'एतावानस्य महिमा अतो ज्यायांश्च पुरुषः' । 'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा' । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' । 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः'। 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति । न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमापे'त्यादिका ।

युक्तिश्च । बुद्धिपूर्वं सर्वकर्तृत्वात्सर्वज्ञत्वादयो गुणा युक्ताः ।

---

ऋग्वेदब्राह्मणम्

तत्सन्निर्मिमीते सत्रा वृषन् जठर आवृषस्वेति वृषण्वद्वै षोळशिनो रूपं सर्वेभ्यो वा एष सवनेभ्यस्सन्निर्मितो यत्षोळशी तद्यदपाः पूर्वेषां हरिवः सुतानामिति जयति सर्वेभ्य एवैनं तत्सवनेभ्यः सन्निर्मिमीते सर्वेभ्यः सवनेभ्यः सन्निर्मितेन षोळशिना राध्नोति य एवं वेद महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्यो वा एष च्छन्दोभ्यः सन्निर्मितो यत्षोळशी तद्यन्महानाम्नीनां पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्य एवैनं तच्छन्दोभ्यः सन्निर्मिमीते सर्वेभ्यश्छन्दोभ्यस्सन्निर्मितेन षोळशिना राध्नोति य एवं वेद ॥ खण्डः ४ ॥ ऋग्वेदब्राह्मणचतुर्थपञ्चिकायां आद्याध्याये चतुर्थखण्डः सम्पूर्णः ॥

'कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभमि'ति च भागवते। न 'चैको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चे'त्यादिविरोधः। सत्त्वादिगुणाभावोक्तेस्तत्र। अन्यथैको देवः सर्वभूतेषु गूढ इत्यादीनामपि गुणत्वात्स्वोक्तिविरोधः। न च निर्विशेषं नाम किञ्चिदस्ति। निर्विशेषत्वोक्तेरेव व्याहतत्वात्। निर्विशेषत्वेन विशिष्टं तन्न वेत्युक्ते यद्यविशिष्टं तर्हि न विशेषनिराकरणम्। विशेषवत्त्वमेव भवति। यदि तेन विशिष्टं स एव विशेष इति व्याहतिः। न च निर्विशेषत्वे किञ्चिन्मानम्। अशेषविशेषवचनानुभवयुक्तिविरोधश्च। न च मिथ्याविशेषवत्। व्याहतेः। मिथ्याविशेष इत्युक्ते ह्यसद्विशेष इत्येव भवति। तथाच विशेषविशिष्टपक्षोक्तदोष एव। न चानिर्वचनीयविशेष इति भवति। अनिर्वचनीयासिद्धेः। न हि तत्र प्रत्यक्षमस्ति। मिथ्याशब्दस्त्वभाववाच्येव। तदन्यत्र प्रमाणाभावात्। न चान्यत्प्रमाणम्। प्रतिज्ञाव्याहतेः। न हि सदन्तरासतश्चान्यत्सदसद्विलक्षणं प्रसिद्धम्। असन्न भवतीत्युक्ते द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति सदेव भवति। असदन्तरं वा विशेषविवक्षायाम्। किञ्चैतद्वैलक्षण्यम् भेदोऽभेदो भेदाभेदो वा। न तावद्भेदः अनङ्गीकारात्। व्यावहारिकभेदश्चानिर्वाच्यसिद्धौ वक्तव्यः। न चाव्यावहारिकं किञ्चित्। न चाशेषव्यवहारनिवृत्तौ किञ्चिन्मानम्। न च मिथ्यातथ्ययोः सामान्यं व्यावहारिकत्वं धूमबाष्पयोर्धूमत्ववत्। न चाभेदोऽनङ्गीकारादेव। तथैवोभयम्। अभेदे चानिर्वाच्यब्रह्मणोस्तच्छब्दयोः पर्यायत्वम्। न च व्यावर्त्यविशेषेणापर्यायत्वं क्वचित्। व्यावर्त्यविशेषस्तद्व्यावृत्ते ब्रह्मणि विशेषमापादयति चेद्विशिष्टवाक्यार्थता। न चेन्न ब्रह्मज्ञानार्थिने पदान्तरं वाच्यम्। असङ्गतत्वात्। मिथ्याविशेषस्य चासिद्धिरुक्ता। अतोऽन्योऽन्याश्रयताऽनवस्थितिश्चक्रकं वा।



भेदाभेदविलक्षणमप्युक्तरीत्यैवापाकृतम्। किञ्चासद्विलक्षणमित्यत्राभावान्यविरोधानां मध्ये नञः कोऽर्थः?। यद्यभावो न। असद्विलक्षणत्वं भावत्वमेव जगतः स्यात्। न च सतोऽन्यस्मादसतो विलक्षणं जगत्। असतोऽन्यत्वादिधर्मानङ्गीकाराद्ब्रह्मणश्च। असतोऽनिर्वचनीयत्वाङ्गीकाराच्च न वैलक्षण्यं ततोऽनिर्वाच्यस्य। तथापि चेद्वैलक्षण्यं नानिर्वचनीय(वाच्य)त्वं जगतः। न च विरोधः। विरोधिनोरन्यतरनिषेधेऽन्यतरव्याप्तत्वानुभवात्। अविद्यमानं न भवतीत्युक्ते विद्यमानमित्येव हि सर्वलोकानुभवः। अतोऽनन्तगुणो भगवान्नारायण इति सिद्धम्॥

न च सिद्धेऽर्थे वाक्यस्य प्रामाण्याभावादीश्वराद्यसिद्धिः। सिद्धातिरिक्तकार्याभावात्। लिङाद्यर्थस्त्विष्टसाधनत्वमेव। न हि कर्तव्यत्वं नामेष्टसाधनत्वादन्यत्किञ्चित्। तन्मानाभावात्। शब्दस्तु न तद्वक्तीत्युक्तम्। लिङादेरिष्टसाधनार्थत्वेनैव कृतार्थत्वे तदन्यकार्यकल्पने कल्पनागौरवम्। न च तत्कल्पकं किञ्चित्। विप्रतिपत्तौ चान्यन्मानं वक्तव्यं तद्भावे। न चानुमा। अप्रसिद्धविशेषणत्वात्। न चार्थापत्तिः। अनुपपत्त्यभावात्। कार्याभावादेव कार्यान्वयिनि[कार्यान्वयान्वयिनि वा]व्युत्पत्तिरित्यादि दूरतो निरस्तम्। कार्यान्विते व्युत्पत्तिरिति वदतोऽकार्यान्विते व्युत्पत्तिरित्युक्ते किमुत्तरम्। अध्याहारइत्युक्ते लोप इत्युत्तरम्। अशेषसिद्धपदानामर्थलोपाल्लिङाद्यर्थमात्रलोप एव गरीयान्। हससि हसामीत्यादि सिद्धार्थ एव बालानां व्युत्पत्तेः। प्रथमप्राप्तत्वान्न तत्त्यागे कारणम्। तथैव व्युत्पत्तिदर्शनाच्च। अतः सिद्धार्थे प्रामाण्यसिद्धेश्च सिद्धं महागुणवत्त्वं विष्णोः॥

ताश्च विदा मघवन्नित्याद्याः । हे मघवन् यशस्विन् मखपत इति वा । 'तं वा एतं मघ(ख)वन्तं सन्तं मघवानित्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' । 'तेभिरिन्द्रं चोदय दातवे मघम्' । 'तन्न आयातु मघाय' । 'यशो वाव मघम्' । 'मघमनु प्रापत्सि । आ मामेतु मघम्' । 'मघमनु प्रापत्सि । धनं वाव मघमि'त्यादिश्रुतिभ्यः ॥ गातुं त्वां स्तोतुम् । विद वेदयेति सामान्यतोऽपेक्षिताशेषवेदनमुक्त्वा तात्कालिकापेक्षितं प्रार्थयति । गातुं विदेति । त्वमेवानुशंसिषो दिशः मार्गान् । आत्मनः स्तुतिप्रकारांस्त्वमेवोपदिशेत्यर्थः । पूर्वीणां भगवत्सम्प्रदायागतानां परमविद्यानामर्थे शिक्ष । शचीनां विद्यानां पते, वाचां पत इति वा । पुरूवसो बहुवित्त बहुज्ञानेति वा । बहुषु वसति बहूनामास इति वा ॥ १ ॥ आभिः अभिष्टिभिः एवंभूतैस्त्वत्पर्येषणैस्त्वत्प्रार्थनैः कश्चिन्मदादिकं प्रचेतय प्रबोधय । प्रकृष्टचेतन सर्वज्ञ परमात्मन् । द्युम्नाय ज्ञानाय । वित्ताय यशसे वा । इषे अन्नाय च नः प्रबोधय । एतादृशो हि शक्रः । शक्र एवेति वा । शक्तिरतिरूपत्वाच्छक्रः ॥ २ ॥ राये वित्ताय । वाजाय अन्नाय । वज्रिणं इन्द्रं वर्तयतीति वज्रिवः । नियामकत्वेन गच्छतीति वा । शविष्ठ बलवत्तम सुखवत्तमेति वा । ऋञ्जसे प्रेरयसि सर्वान् । मंहिष्ठ वज्रिन्नृञ्जस इत्यभ्यासस्तात्पर्यार्थः । मत्स्व मदं कुरु ॥ ३ ॥ विद वेदय लम्भय रायः सुवीर्यं च । वाजानां प्रजानां पतिर्भुवः अभवः । 'प्रजा वै वाज'इति श्रुतेः । वशाँ अनु यथावशम् । वश इच्छायामिति धातोः । यथावशं

---

॥ अथैतरेयोपनिषच्चतुर्थारण्यकम् ॥

ॐ ॥ विदा मघवन्विदा गातुमनुशंसिषो दिशः । शिक्षा शचीनां पते पूर्वीणां पुरूवसो ॥ १ ॥ आभिष्ट्वमभिष्टिभिः प्रचेतन प्रचेतय । इन्द्र द्युम्नाय न इष एवा हि शक्रः ॥ २ ॥ राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे । मंहिष्ठ वज्रिन्नृञ्जस आयाहि पिब मत्स्व ॥ ३ ॥ विदा रायः सुवीर्यं भुवो वाजानां पतिर्वशाँ अनु । मंहिष्ठ वज्रिन्नृञ्जसे यः



यथेच्छम् । शूराणां सकाशाद्बलवत्तमः ॥ ४ ॥ मघोनां यशस्विनां महत्तमः । चिकित्वः ज्ञातः कर्तरिति वा । नः अभितः सर्वतो नय । इन्द्रो विदे समस्तं व्यजानात् । तमेव स्तुपे ॥ ५ ॥ ऊतये रक्षायै अभिप्रायसिद्धये वा । स नो द्विषः शत्रूनतिपारयतु पापानि तमांसि वा । क्रतुः ज्ञानरूपः । छन्दः इच्छारूपः । छन्द्यत्वाच्छादनत्वाद्वा । ऋतं अशेषशास्त्रावगतम् ॥ ६ ॥ सातये लब्धये । स्रिधः विनाशान् ॥ ७ ॥ पूर्वस्यानादेः सतस्ते सकाशात् यत्सुम्नं सुखं तस्मिन्नः आधेहि । तव पूर्तिः शस्यते ॥ ८ ॥ तन्नव्यं स्तुत्यम् । ब्रह्म तत्सम्यग्घृदि मन्यसे । जनस्योपदेशेन तत्स्वरूपेषु त्वं चाहं च संब्रवावहै । गोषु ज्ञानेषु गच्छति ज्ञानविषयो भवति । सुशेवः सुसुखः । समाधिकवर्जितोऽद्वयः ॥ ९ ॥ एवाह्येवैवाहीत्यग्न्यादिदेवतानां संवादरूपेणोक्तमर्थमतिशयेनावधारयति । अभ्यासो हि तात्पर्यार्थः । एवाहि एवमेवेत्यर्थः । 'विनिश्चिते तु संवादे विभागो रङ्ग एव चे'ति शब्दनिर्णये । अतोऽग्नाइ इत्यादि । एवमेव हि शक्रो वशाननु यथावशं स्वतन्त्रो वर्तत इत्यर्थः । अय पय गताविति धातोः आयो इत्यायतिः । उपो इतिवदतिशयार्थ ओकारः । 'ओ अतिशय'इति च सूत्रम् । आयो जानातीत्यायोमन्यः । समीपस्थ-

---

शविष्ठ ः शूराणां ॥ ४ ॥ यो मंहिष्ठो मघोनां चिकित्वो अभि नो नय । इन्द्रो विदे तमु स्तुषे वशी हि शक्रः ॥ ५ ॥ तमूतये हवामहे जेतारमपराजितम् । स नः पर्षदतिद्विषः क्रतुश्छन्द ऋतं बृहत् ॥ ६ ॥ इन्द्र धनस्य सातये हवामहे जेतारमपराजितम् । स नः पर्षदतिद्विषः स नः पर्षदति स्रिधः ॥ ७ ॥ पूर्वस्य यत्ते अद्रिवः सुम्न आधेहि नो वसो । पूर्तिः शविष्ठ शस्यत ईशे हि शक्रः ॥ ८ ॥ नूनं तं नव्यं सन्यसे प्रभो जनस्य वृत्रहन् । समन्येषु ब्रवावहै शूरो यो गोषु गच्छति सखा सुशेवो अद्वयाः ॥ ९ ॥ एवा ह्येवैवाह्यग्नाँ ३इ ॥ एवाह्येवैवावीन्द्रँ ॥ एवा

मपि जानातीत्युपोमन्यः । अन्येषामिन्द्रियाणां पराङ्मुखत्वान्न ह्यान्तरं जानन्ति । अयं त्वान्तरमप्यापरोक्ष्येण पश्यति । अयनेन प्राप्यं दूरस्थमायो इति वा । मनु अवबोधन इति धातोर्मन्युरिति ज्ञानी । बाह्यज्ञाय ज्ञानिने आन्तरज्ञाय ज्ञानिन इत्यभ्यासो हि तात्पर्यार्थः । एवं विधं मद्गतं त्वामुद्दिश्यैवोपेहि । विश्वध विश्वधारक । समीपतो दूरतश्च त्वां मन्यमानाय मह्यं मन्यवे ज्ञानाय मामुपेहीति वा । समीपे दूरतोऽभिज्ञं त्वामुद्दिश्यैव मद्गतं । एहि विष्णो न मे शक्तिस्त्वदाह्वानेहि मामुप । इति ब्रह्माऽस्तुवद्विष्णुं तन्नाभ्युत्थित-पद्मग' इति पाद्मे । 'समीपे दूरतश्चैव ध्यायन्तं त्वां सदा विभो । मामेहि ज्ञानदानायेत्याह गाधिसुतो हरिमि'ति स्कान्दे । 'ओत-मस्मिञ्जगद्यस्मादोमित्युक्तो हरिः सदा । तमेव जगदाधारं यतयः पर्युपासत' इति मान्यसंहितायाम् । इन्द्रो वा एताभिर्महानात्मानं निरमिमीतेत्यस्याप्युक्तो एवार्थः । निर्माणं नामात्मनस्तद्व्याख्यानेन ख्या(स्था)पनम् । न ह्यन्यथा तासां करणत्वं भवति । 'यस्तद्वेद स पितुष्पितासदि'ति (च) श्रुतिः । 'त्रीणि पदा निहिता गुहासु यस्तद्वेद स पितुष्पिता सत्' । 'स्त्रियः सतीस्ताँ उमे पुंस आहुः पश्यं दक्षण्वान्न विचेतदन्धः । कविर्यः पुत्रः स इमा चिकेत यस्ता विजानात्स पितुष्पिताऽसत्' । इत्यादि श्रुतिभ्यो विज्ञानमेव तन्निर्माणम् । 'इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुरि'त्यादेर्विज्ञा-पनं वा । प्रचेतन प्रचेतय । आयाहि पिब मत्स्व क्रतुश्छन्दऋतं

---

ह्येवैवाहि विष्णाँ ३ उ ॥ एवा ह्येवैवाहि पूषन् ॥ एवा ह्येवैवाहि देवाः ॥ एवा हि शक्रो वशी हि शक्रो वशाँ अनु ॥ आयो मन्याय मन्यव उपोमन्याय मन्यवे ॥ उपेहि विश्वधा ॥ विदा मघवन्विदो ३म् ॥ १० ॥ इति चतुर्थारण्यके प्रथमोऽध्यायः ॥



बृहत् । सुम्न आधेहि नो वसो इत्युपसर्गाः । अंशा अप्यंश्यपेक्षयो-पसर्गा भवन्ति । उपसृष्टत्वादुपसर्गाः । 'अन्तर्गतं बहिर्गतं च द्विधा स्यादुपसर्जनम् । हस्तबद्धेतिवच्चैव पदानां चोपसर्गवदि'ति शब्दनिर्णये । 'अधत्तान्यं जठरे प्रेमरिच्यत प्रचेतन ॥ दाता राधः स्तुवते काम्यं वसु प्रचेतय ॥ अस्माकं बोधि चोदिताऽऽयाहि पिब मत्स्व ॥ तं त्वा परिष्वजामहे क्रतुश्छन्दऋतंबृहत् ॥ या ते राति-र्ददिर्वसुः सुम्न आधेहि नो वसो' इत्युपसृजति । अशेषमहानाम्न्यर्थ-संस्मरणपरिज्ञानपूर्वकमुपसर्गसंयोजनं कर्तव्यमित्येतदर्थत्वेन महानाम्नी प्रशंसा क्रियते । अन्यथा तावन्मात्रप्रशंसामृते अशेषमहानाम्नीप्रशंसा-या व्यर्थत्वात् । तृच विभागेन विदा मघवन्, तमूतये, नूनमिति वा तिस्रो महानाम्न्यः । 'प्रथमा या महानाम्नी तद्वाच्यः पार्थिवो हरिः। द्वितीयाया आन्तरिक्ष्यस्तृतीयाया द्युगः प्रभुरि'त्यृक्संहितायाम्। 'तृचास्तिस्रो महानाम्न्यः पञ्चर्चा प्रथमापरा । तृचा द्व्यृचा च निगदैस्तार्तीया सप्तभिर्युता । इति त्रेधा विभागः स्याज्जपध्यानादि कर्मस्वि'ति च । 'त्रिलोकगेन हरिणा निर्मितः षोळशीक्रतुः । एवं ज्ञात्वा हरिं तं च कर्म कुर्वन्न जायत' इति प्रवृत्ते । एवाह्येवैवाहीत्य-(त्युपसर्ग)स्यार्थोऽप्युक्तावधारणरूपत्वात्पूर्वोक्तार्थपरिज्ञानं विना न स्मर्तुं शक्यते । एवं निर्मितेन षोळशिना ऋद्धो (राद्धो) भवत्येवंवित् ।

---

ॐ ॥ गायत्रीछन्दः ॥ १ ॥ १ ॥ २९ ॥ आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्रं त्वा सूरचक्षसः ॥ १ ॥ इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे ॥ २ ॥ इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ॥ ३ ॥ (मं-१, सू-१६)

पङ्क्तिछन्दः ॥ १ ॥ ६ ॥ ३ ॥ उपो षु शृणुही गिरो मघवन्मातथा इव। यदा नः सूनृतावतः कर आदर्थयास इद्योजा न्विन्द्र ते हरी ॥ १ ॥ सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि। प्र नूनं पूर्णवंधुरः स्तुतो याहि वशाँ अनु योजान्विन्द्र ते हरी ॥ ३ ॥ स घा तं वृषणं रथमधि तिष्ठाति गोविदम्। यः पात्रं हारियोजनं पूर्णमिंद्र चिकेतति योजान्विन्द्र ते हरी ॥ ४ ॥ (मं-१, सू-८२)

उष्णिकछन्दः ॥ ६ ॥ १ ॥ ५ ॥ यदिन्द्र पृतनाज्ये देवास्त्वा दधिरे पुरः। आदित्ते हर्यता हरी ववक्षतुः ॥ २५ ॥ ६ ॥ १ ॥ ६ ॥ यदा वृत्रं नदीवृतं शवसा वज्रिन्नवधीः। आदित्ते हर्यता हरी ववक्षतुः ॥ २६ ॥ यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे। आदित्ते हर्यता हरी ववक्षतुः ॥ २७ ॥ (मं-८, सू-१२)

बृहतीछन्दः ॥ ३ ॥ ३ ॥ ८ ॥ अयं ते अस्तु हर्यतः सोम आ हरिभिस्सुतः। जुषाण इंद्र हरिभिर्न आ गह्या तिष्ठ हरितं रथम् ॥ १ ॥ हर्यन्नुषसमर्चयः सूर्यं हर्यन्नरोचयः। विद्वांश्चिकित्वान्हर्यश्व वर्धस इन्द्र विश्वा अभि श्रियः ॥ २ ॥ द्यामिन्द्रो हरिधायसं पृथिवीं हरिवर्पसम्। अधारयद्धरितोर्भूरि भोजनं ययोरन्तर्हरिश्चरत् ॥ ३ ॥ (मं-३. सू-४४.)

द्विपदाऋक् ॥ ५ ॥ ३ ॥ २५ ॥ आ धूर्ष्वस्मै दधाताश्वानिन्द्रो न वज्री हिरण्यबाहुः ॥ ४ ॥ (मं-७. सू-३४.) ॥ एष ब्रह्माय ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ विश्रुतयो यथा पथो इन्द्र त्वद्येति रातयः ॥ त्वामिच्छव सस्पते यन्ति गिरो न संयतः ॥

त्रिष्टुप्छन्दः ॥ ५ ॥ ३ ॥ १३ ॥ ब्रह्मन्वीर ब्रह्मकृतिं जुषाणोऽर्वाचीनो हरिभिर्याहि तूयम् ॥ अस्मिन्नू षु सवने मादयस्वोप ब्रह्माणि शृणव इमा नः ॥ २ ॥ (मं-७. सू-२९.)

जगतीछन्दः ॥ ८ ॥ ५ ॥ ५ ॥ प्र ते महे विदथे शंसिषं हरी प्र ते वन्वे वनुषो हर्यतं मदम्। घृतं न यो हरिभिश्चारु सेचत आ त्वा विशन्तु हरिवर्पसं गिरः ॥ १ ॥ हरिं हि योनिमभि ये समस्वरन्हिन्वन्तो हरी दिव्यं यथा सदः। आ यं पृणन्ति हरिभिर्न धेनव इन्द्राय शूषं हरिवन्तमर्चत ॥ २ ॥ सो अस्य वज्रो हरितो य आयसो हरिर्निकामो हरिरा गभस्त्योः ॥ घृष्वी सुशिप्रो हरिमन्युसायक इन्द्रे नि रूपा हरिता



प्रप्र वः हे ऋत्विजः प्रजा वा वस्त्रिष्टुभमिषं त्रिष्टुभाख्यमन्नमिन्द्रः परमेश्वरः सोमाय आविवासति। पुरंध्या धिया अशेषप्राणिदेहाश्रयया स्वबुद्ध्या प्रप्र प्रकर्षेणातितरां शंसमाना त्रिष्टुप् प्रीतिं करोति। सोमपानार्थमित्यर्थः। मन्दद्वीराय तस्य वीरस्य परमेश्वरस्य मन्दं प्रीतिं करोतीतिमन्दद्वीरः सोमः। न त्वात्मप्रयोजनाय प्रीतिं करोति किंतर्हि वो मेधसातये यज्ञसिद्ध्यर्थम्। व इति गुरुत्वादीश्वरं प्रत्येव वा बहुवचनम्। तदा वोऽन्नं त्रिष्टुभं वो मेधसातये भवद्दैवत्यमिमिक्षिरे ॥३॥ (मं-१०. सू-१६.) अतिछन्दः ॥ २ ॥ ६ ॥ २८ ॥ त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्सोममपिबद्विष्णुना सुतं यथावशत्। स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ १ ॥ अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवदा रोदसी अपृणदस्य मज्मना प्र वावृधे। अधत्तान्यं जठरे प्रेमरिच्यत सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ २ ॥ साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैस्सासहिर्मृधो विचर्षणिः। दाता राधःस्तुवते काम्यं वसु सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥३॥ (मं-२. सू-२२)

वेपशाकर्यः ॥ ८ ॥ ७ ॥ २१ ॥ प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत। अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहास्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १ ॥ त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम्। अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ २ ॥ वि षु विश्वा अरातयोऽर्यो नशंत नो धियः। अस्तासि शत्रवे वधं यो न इन्द्र जिघांसति या ते रातिर्ददिर्वसु नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ ३ ॥ (मं-१०. सू-१३३.)

॥ ६ ॥ ५ ॥ ५ ॥ प्रप्र वस्त्रिष्टुभमिषं मन्दद्वीरायेन्दवे। धिया वो मेधसातये पुरन्ध्या विवासति ॥१॥ नदं व ओदतीनां नदं योयुवतीनां। पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ २ ॥ ता अस्य सूददोहसः सोमं

